ॐ नमः चिद्रूपाय ॥ त्रिवर्णमयमोंकारं भूर्भुवः स्व-
रिति त्रयम् । पादत्रयं च सावित्र्यास्त्रयो वेदा अ-
दूदुहन् ॥ एतदक्षरमेतां च जपन् व्याहृतिपू-
र्विकाम् । संध्ययोर्वेदविद्विप्रो वेदपुण्येन युज्यते ॥
ओं भूर्भुवः स्वस्तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि
धियो यो नः प्रचोदयात् ओं ३ ॥ आदौ गायत्री
शब्दनिरुक्तिः- गायत्त्वं शब्दयत्वं सर्वात्मको-
हमेवास्मीति पूर्णाहन्तां विमृशन्तं त्रायते य-
हन्ताव्यतिरिक्तासत्कल्प-देवतान्तरोपासन-
कलङ्कात् पालयतीति । यदुक्तं महापुरुषैः
उज्झित्वात्मसमाधानं ये ध्यायन्त्यन्यदेवताः ।
भिक्षन्ते भूरिविज्ञास्ते भिक्षित्वापि बुभुक्षिताः ॥ इति

प्रश्च च गायात् प्राणां स्त्रायते इति प्राणधारिणी प्राणनस्वरूपा शक्तिः प्रथमं प्राणस्वरूपेणावतर ति या सैव गायत्री प्राक् संवित्प्राणे परिणतेति श्री मट्टकल्लटोक्तेः। प्राणो वै गायत्री तत्रै तद्गायान् तत्रे तस्माद्गायत्रीति श्रुतेश्च। तत्रे त्रायते इत्यर्थः ॐ ब्रह्ममयं देवमष्टात्रिंशत्कलात्मकम्। पञ्च मात्रात्मकाह्वं कारणं परमं शिवम्॥ अकारो ब्रह्मा इत्युक्त उकारो विष्णुरुच्यते। मकारो रुद्रदैवत्योऽर्धचन्द्र ईश्वरः॥ बिन्दुः सदाशिवो देवः प्रणवः पञ्चदैवतः। तस्य वाचकः प्रणव इति योगसूत्रेषु प्रणवस्य ब्रह्मवाचकत्वं भगवता पतञ्जलिना प्रतिपादितम्। गीतास्वपि

ओमित्येकाक्षरं ब्रह्मेति । अन्यत्रापि अदृष्टविग्र-
हो देवो भावग्राह्यो मनोमयः । तस्योंकारः स्मृ-
तो नाम तेनाहूतः प्रसीदतीति ॥ एवंविधस्य श्री-
परमेश्वरस्य समस्तव्याहृतिभिः विश्वमयत्वमुप-
दिशति ओंभूर्भुवःस्वरिति एतावदियं लोकत्र-
यकल्पना प्रसिद्धा तदोंकारः श्रीपरमेश्वर
एव भवतीत्यर्थः अन्यथैतद्भिन्नस्य लोकत्रय-
स्य सत्ताप्रकाशौ न स्याताम् । तमेव भान्तम
नुभाति सर्वं तस्य भासा सर्वमिदं विभातीति
श्रुतेः ॥ विश्वोत्तीर्णत्वमुपदिशति तत्सवितुरि-
त्यादिना तत् सर्वसामान्यं महासत्तारूपं तदः
सर्वनामत्वात्, प्रसिद्धं च स्वप्रकाशत्वेन परम-

कार्याभावात् अहंप्रत्ययस्य सर्वजनेषु सहज सिद्धत्वात् सर्वैरनुभूतं च। उतैनं विश्वा भूतानीति श्रुतेः। सर्वकारणत्वेन पूर्वप्रकाशत्वं च तत् सर्वव्यापकं भर्गः संवित्प्रकाशं पूर्णस्वातन्त्र्यस्वभावं सवितुर्बोधादित्यस्य स्वभावप्रादुर्भावाख्यस्य संबन्धि धीमहीत्यन्वयः। अत्र यद्यपि सवितुर्भर्ग इति सवितृभर्गयोर्भिन्नता गायत्रीमन्त्रे प्रतीयते तथापि परमार्थचिन्तनया भेदो न विद्यते एव। य एव सविता स एव भर्ग इति सवितृभर्गयोः अद्वैततैव। संबन्धषष्ठी तु राहोः शिर इतिवत् तथाच सवितुः सर्वभावानां प्रसवितुः सर्वेश्वरस्य च देवस्य जगन्निर्माणस्थापनविलापनादि-

क्रीडनशीलस्य यतो वा इमानि भूतानि जायन्ते
येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति
तद्ब्रह्मेति । सृष्टिसंहारकर्तारं विलयस्थितिका-
रकम् । अनुग्रहकरं देवं प्रणतार्तिविनाशनम् ॥
इति वेदतन्त्रोक्तिरत्र प्रमाणम् । तद्भर्गः स्वरूपप-
रमार्थं तेजः भ इति भासयतीमान् लोकान्
र इति रञ्जयति इमाः प्रजाः ग इति गच्छन्ति
अस्मिन् आगच्छन्त्यस्मात् तस्मात् भरगत्वा-
त् भर्ग इति श्रुतिभिर्निरुक्तम् । धीमहि ध्याया-
मः भावयामः स्वत्वेन परामृशामः इति या-
वत् । एतादृशस्य सर्वव्यापकस्य नित्यस्याप-
रिच्छिन्नस्वभावस्य अभेदविमर्शनमेव ध्यानम्

नतु अव्यापकविनाशि परिच्छिन्नपञ्चवक्त्रादिक-
ल्पनम्। उक्तं हि श्रीविज्ञानभैरवे ध्यानं या नि-
श्चला बुद्धिर्निराकारा निराश्रया। ननु ध्यानं
शरीरस्य मुखहस्तादिकल्पनेति॥ श्रीवसिष्ठोपि
सोऽहं चिन्मात्रमेवेति चिन्तनं ध्यानमुच्यते।
ध्यानस्यापि विस्मृतिः सम्यक्समाधिरभिधीयते
इति॥ स्थूलध्यानादिकं तु पशुप्रमातृविषयमे-
व तत्र तत्र दर्शितम्। तस्य सकलकल्पनाया-
ससारत्वात्। तदुक्तं विज्ञानभैरवे यत्किंचित्
सकलं रूपं भैरवस्य प्रकीर्तितम्। तदसारत-
या देवि विज्ञेयमिन्द्रजालवत्॥ मायास्वप्नोप-
मं चैव गन्धर्वनगरभ्रमम्। ध्यानार्थं भ्रान्तबुद्धीनां

क्रियाडम्बरवर्तिनाम् ॥ केवलं वर्णितं पुंसां वि-
कल्पनिहतात्मनामिति । श्रीभैरवस्तोत्रेष्वपि
ध्यानं पूजादिकं जप्यं होमादिस्त्याग एव च । आह्वा-
नं कारणं ध्यानमाहुर्हृदम्बुजे दर्शयेत इति । श्री-
गीतास्वपि आरुरुक्षोर्मुनेर्योगं कर्म कारणमु-
च्यते इति । श्रीभागवते यावन्न जायेत पराव-
रेऽस्मिन्विश्वेश्वरे द्रष्टरि भक्तियोगः । तावत्स्थ-
वीयः पुरुषस्य रूपं क्रियावसाने पुरुषः स्मरे-
तेति । कपिलदेवोऽपि अर्चायामर्चयेत्तावदीश्व-
रं मां स्वकर्मकृत् । यावन्न वेद स्वहृदि सर्वभू-
तेष्ववस्थितम् इति ॥ श्रीवसिष्ठोऽपि यावदप्र-
तिबुद्धस्त्वमनात्मज्ञतया स्थितः । तावच्चतुर्भु-

ज्ञाकारदेवपूजापरो भवेति। किंभूतं भर्गः —
वरेण्यं जन्मसंहारभीरुभिः ध्यानफलमुक्ति-
रूपं ध्येयतया प्राप्यतया च वरणार्हमभिल-
षणीयमित्यर्थः। अभिलषणीयत्वमेव मन-
सि निधाय भट्टनारायणः — भगवन् भव भा-
वत्कं भावं भावयितुं रुचिः। पुनर्भवभयोच्छे-
ददक्षा कस्मै न रोचते इति॥ बाह्यजडप्रका-
शमयादित्यशङ्कां शिथिलयन् चेतनत्वमुप-
दिशति धियो यो नः प्रचोदयात इति यः
पूर्णाहन्तामयसंवित्स्वभावो विशुद्धचैतन्यमा-
८ त्रमूर्तिरात्मा नोऽस्माकं ब्रह्मादिस्थावरान्ता-
नां प्रमातॄणां धियो बाह्याभ्यन्तराणि प्रचो-
करणानि

दयात् प्रेरयति जडान्यपि तत्तद्देह्यजातविषय-
ज्ञानसंकल्पाध्यवसायकारयितृत्वेन चेतनी-
भावमापादयति । उक्तं श्रीवसुगुप्तपादैः स्पन्दे
यतः करणवर्गोऽयं विमूढोऽमूढवत् स्वयम् ।
सहान्तरेण चक्रेण प्रवृत्तिस्थितिसंहृतीः ।
लभते तत्प्रयत्नेन परीक्ष्यं तत्त्वमादरात् । यतः
स्वतन्त्रता तस्य सर्वत्रेयमकृत्रिमा ॥ इति ।
अन्यत्रापि य इह वा स्थिरचरनिकराणां नि-
जनिकेतनानां मन इन्द्रियासुगणान् अना-
त्मनः स्वयमन्तर्यामी प्रचोदयतीति ॥ ये
सदैवैतत् परिशीलयन्ति ते स्वरूपविका-
समयं विश्वं जानाना जीवन्मुक्ता एव । ये तु

न तथा ते शूद्रजायाः सर्वकर्मस्वनधिकृताः
इति शिवम् ॥ इति श्रीमहामाहेश्वरविद्वद्वर-
शिवोपाध्यायविरचितं श्रीमहागायत्रीमन्त्र-
व्याख्यानं संपूर्णम् ॥ गायत्रीमन्त्रव्याख्या-
नं नारायणकृते हनि । हरराज्ञ्यभिधे लिप्या
व्यलिख्यत भवानिहस्तम् ॥ संवत् १९८२ ॥